# नित्यपूजा विधान

## संस्कृत

जिसको

जैनसिद्धान्त प्रचारक मण्डली

देवबन्द जि० सहारनपुर

की तरफ से

बाबू सूरजभानु वकील देवबन्दने

देशोपकारक प्रेस, लखनऊ में छपाकर

प्रकाशित किया.

सन् १९०९

प्रथमवार १००० मूल्य ढाईआना

* ॐ नमः सिद्धेभ्यः *

# नित्यपूजा ।

ॐ जय जय जय । नमोऽस्तु नमोऽस्तु नमोऽस्तु ।
णमो अरिहंताणं, णमो सिद्धाणं णमो आयरीयाणं ।
णमो उवज्झायाणं, णमो लोए सव्वसाहूणं ॥ १ ॥

ओं अनादिमूलमन्त्रेभ्यो नमः ।

( यहां पुष्पाञ्जलि क्षेपण करना. )

चत्तारि मंगलं—अरहंतमंगलं सिद्धमंगलं साहू मंगलं केवलिपण्णतो धम्मो मंगलं । चत्तारि लोगुत्तमा अरहंतलोगुत्तमा, सिद्धलोगुत्तमा, साहू लोगुत्तमा, केवलिपण्णतो धम्मो लोगुत्तमा । चत्तारि सरणं पव्वज्जामि—अरहंतसरणं पव्वज्जामि, सिद्ध

सरणं पव्वज्जामि, साहू सरणं पव्वजामि, केवलिपण्णत्तो धम्मो सरणं पव्वज्जामि ॥

ॐ नमोऽर्हते स्वाहा ।

( यहां पुष्पाञ्जलि क्षेपण करना. )

अपवित्रः पवित्रो वा सुस्थितो दुःस्थितोऽपि वा ।
ध्यायेत्पञ्चनमस्कारं सर्वपापैः प्रमुच्यते ॥ १ ॥
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्परमात्मानं स बाह्याभ्यन्तरे शुचिः ॥ २ ॥
अपराजितमन्त्रोऽयं सर्वविघ्नविनाशनः ।
मङ्गलेषु च सर्वेषु प्रथमं मङ्गलं मतः ॥ ३ ॥
एसो पंचणमोयारो सव्वपावपणासणो ।
मंगलाणं च सव्वेसिं, पढमं होइ मंगलं ॥ ४ ॥
अर्हमित्यक्षरं ब्रह्म वाचकं परमेष्ठिनः ।

सिद्धचक्रस्य सद्बीजं सर्वतः प्रणमाम्यहम् ॥ ५ ॥
कर्माष्टकविनिर्मुक्तं मोक्षलक्ष्मीनिकेतनम् ।
सम्यक्त्वादिगुणोपेतं सिद्धचक्रं नमाम्यहम् ॥ ६ ॥

( यहां पुष्पांजलि क्षेपण करना. )

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः
धवलमङ्गलगानरवाकुलेजिनगृहे
जिननाथमहं यजे ॥ ७ ॥

ॐ ह्रीं भगवाज्जिनसहस्रनामभ्योऽर्घ्यं निर्वपामीति स्वाहा ॥

श्रीमज्जिनेन्द्रमभिवन्द्यजगत्त्रयेशं
स्याद्वादनायकमनन्तचतुष्टयार्हम् ।
श्रीमूलसंघसुदृशां सुकृतैकहेतु-
र्जैनेन्द्रयज्ञविधिरेष मयाऽभ्यधायि ॥ ८ ॥
स्वस्ति त्रिलोकगुरवे जिनपुङ्गवाय

स्वस्ति स्वभावमहिमोदयसुस्थिताय ।
स्वस्ति प्रकाशसहजोर्ज्जितदृङ्मयाय
स्वस्ति प्रसन्नललिताद्भुतवैभवाय ॥ ९ ॥
स्वस्त्युच्छलद्विमलबोधसुधाप्लवाय
स्वस्ति स्वभावपरभावविभासकाय ।
स्वस्ति त्रिलोकविततैकचिदुद्गमाय
स्वस्ति त्रिकालसकलायतविस्तृताय ॥ १० ॥
द्रव्यस्य शुद्धिमधिगम्य यथानुरूपं
भावस्य शुद्धिमधिकामधिगन्तुकामः ।
आलम्बनानि विविधान्यवलम्ब्य वल्गन्
भूतार्थयज्ञपुरुषस्य करोमि यज्ञम् ॥ ११ ॥
अर्हत्पुराणपुरुषोत्तमपावनानि
वस्तून्यनूनमखिलान्ययमेक एव ।

अस्मिन् ज्वलद्विमलकेवलबोधवह्नौ
पुण्यं समग्रमहमेकमना जुहोमि ॥ १२ ॥

( यहां पुष्पांजलि क्षेपन करना )

श्रीवृषभो नः स्वस्ति स्वस्ति श्रीअजितः । श्रीसंभवः स्वस्ति स्वस्ति श्रीअभिनन्दनः । श्रीसुमतिःस्वस्ति स्वस्ति श्रीपद्मप्रभः । श्रीसुपार्श्वः स्वस्ति स्वस्ति श्रीचन्द्रप्रभः । श्री पुष्पदन्तः स्वस्ति स्वस्ति श्री शीतलः।श्री श्रेयान्स्वस्तिस्वस्ति श्रीवासुपूज्यः । श्री विमलःस्वस्तिस्वस्तिश्रीअनन्तः।श्रीधर्मःस्वस्तिस्वस्ति श्रीशान्तिः।श्रीकुन्थुः स्वस्ति स्वस्तिश्रीअरनाथः । श्रीमल्लिः स्वस्ति स्वस्ति श्रीमुनिसुव्रतः । श्रीनमिः स्वस्ति स्वस्ति श्रीनेमिनाथः।श्रीपार्श्वः स्वस्ति स्वस्ति श्रीवर्द्धमानः।इति स्वस्तिमङ्गलविधानम् ।

( पुष्पांजलि क्षेपन करना )

नित्याप्रकम्पाद्भुतकेवलौघाः स्फुरन्मनः
पर्य्ययशुद्धबोधाः ।
दिव्यावधिज्ञानबलप्रबोधाःस्वस्ति
क्रियासुःपरमर्षयो नः ॥ १ ॥
कोष्टस्थधान्योपममेकबीजं
संभिन्नसंश्रोतृपादानुसारि ।
चतुर्विधं बुद्धिबलंदधानाः स्वस्ति
क्रियासुःपरमर्षयोनः ॥ २ ॥
संस्पर्शनं संश्रवणं च दूरादा
स्वादनाघ्राणविलोकनानि ।
दिव्यान्मतिज्ञानबलाद्वहन्तः
स्वस्तिक्रियासुः परमर्षयोनः ॥ ३ ॥

प्रज्ञाप्रधानाः श्रमणाःसमृद्धाः
प्रत्येकबुद्धाद्दशसर्वपूर्वैः
प्रवादिनोऽष्टाङ्गनिमित्तविज्ञाः
स्वस्तिक्रियासुः परमर्षयोनः ॥ ४ ॥
जङ्घावलिश्रेणिफलाम्बुतन्तुप्रसून
बीजाङ्कुरचारणाह्वाः ।
नभोऽङ्गणस्वैरविहारिणश्च स्वस्ति
क्रियासुः परमर्षयोनः ॥ ५ ॥
अणिम्नि दक्षाः कुशला महिम्नि
लघिम्नि शक्तया कृतिनो गरिम्णि ।
मनो वपुर्वा ग्वलिनश्च नित्यं
स्वस्ति क्रियासुः परमर्षयो नः ॥ ६ ॥
सकाम रूपित्व वशित्व मैश्यं

प्राकाम्यमन्तर्द्धिमथाप्तिमाप्ताः ।
तथाऽप्रतीघातगुणप्रधानाः
स्वस्ति क्रियासुः परमर्षयो नः ॥ ७ ॥
दीप्तं च तप्तं च तथा महोग्रं
घोरं तपो घोरपराक्रमस्थाः ।
ब्रह्मापरं घोरगुणाश्चरन्तः
स्वस्ति क्रियासुः परमर्षयो नः ॥ ८ ॥
आमर्षसर्वौषधयस्तथाशीर्विष
विषा दृष्टि विषं विषाश्च ।
सखिल्लविड्जल्लमलौषधीशाः
स्वस्ति क्रियासुः परमर्षयो नः ॥ ९ ॥
क्षीरं स्रवन्तोऽत्र घृतं स्रवन्तो
मधु स्रवन्तोऽप्यमृतं स्रवन्तः ।

अक्षीणसंवासमहानसाश्च
स्वस्ति क्रियासुः परमर्षयो नः ॥ १० ॥

[ पुष्पांजलि क्षेपन करना ]

सार्वः सर्वज्ञनाथः सकलतनुभृतां
पापसन्तापहर्त्ता त्रैलोक्याक्रान्तकीर्त्तिः
क्षतमदनरिपुर्घातिकर्मप्रणाशः ।
श्रीमान्निर्वाणसम्पद्वरयुवति
करालीढकण्ठः सुकण्ठै-
र्देवेन्द्रैर्वन्द्यपादो जयति जिनपतिः
प्राप्तकल्याणपूजः ॥ १ ॥

जय जय जय श्रीसत्कान्तिप्रभो जगतांपते
जय जय भवानेव स्वामी भवाम्भसिमज्जताम्
जय जय महामोहध्वान्तप्रभातकृतेऽर्चनम्

जय जय जिनेश त्वं नाथ प्रसीद करोम्यहम्॥२

## देव आह्वाहन

ॐ ह्रीं भगवञ्जिनेन्द्र ! अत्र अवतर अवतर। सं वौषट्।

## देव स्थापन

ॐ ह्रीं भगवञ्जिनेन्द्र ! अत्र तिष्ठ तिष्ठ। ठः ठः।

## देव सन्निधि करण

ॐ ह्रीं भगवञ्जिनेन्द्र ! अत्र मम सन्निहितो भव भव। वषट्

देवि श्रीश्रुतदेवते ! भगवति ! त्वत्पादपङ्करुह-
द्वन्द्वे यामि शिलीमुखत्वमपरं भक्त्या मया प्रार्थ्यते।
मातश्चेतसि तिष्ठ मे जिनमुखोद्भूते सदा त्राहिमाम्
दृग्दानेन मयि प्रसीद भवतीं सम्पूजयामोऽधुना॥३

## शास्त्र आह्वाहन

ॐ ह्रीं जिनमुखोद्भवद्वादशांगश्रुतज्ञान ! अत्र अवतर अवतर। सं वौषट्।

## शास्त्र स्थापन

ॐ ह्रीं जिनमुखोद्भवद्वादशांगश्रुतज्ञान ! अत्र तिष्ठ तिष्ठ । ठः ठः

## शास्त्र सन्निधिकरण

ॐ ह्रीं जिनमुखोद्भवद्वादशांगश्रुतज्ञान ! अत्र मम सन्निहितं

भव भव । वषट् ।

संपूजयामि पूज्यस्य पादपद्मयुगं गुरोः ।

तपःप्राप्तप्रतिष्ठस्य गरिष्ठस्य महात्मनः ॥ ४ ॥

## गुरु अह्वाहन

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुसमूह ! अत्र अवतर

अवतर । संवौषट् ।

## गुरु स्थापन

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुसमूह !

अत्र तिष्ठ तिष्ठ । ठः ठः ।

## गुरु सन्निधि करण

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुसमूह !

अत्र मम सन्निहितो भव भव। वषट्।

देवेन्द्रनागेन्द्रनरेन्द्रवन्द्यान्
शुम्भत्पदान्शोभितसारवर्णान्।
दुग्धाब्धिसंस्पर्द्धिगुणैर्जलौघैर्जि-
नेन्द्रसिद्धान्तयतीन् यजेऽहम्॥ १॥

१ ॐ ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोष रहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने जन्ममृत्यु विनाशनाय जलं निर्वपामीति स्वाहा।

२ ॐ ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशाङ्गश्रुत ज्ञानाय जन्ममृत्युविनाशनाय जलं निर्वपामीति स्वाहा।

३ ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचा- र्योपाध्यायसर्व साधुभ्यो जन्म मृत्युविनाशनाय जलं निर्वपामीति स्वाहा।

ताम्यत्त्रिलोकोदरमध्यवर्त्तिसमस्त
सत्वाहितहारिवाक्यान्।

श्रीचन्दनैर्गन्धविलुब्ध भृङ्गैर्जिनेन्द्र
सिद्धान्तयतीन् यजेऽहम् ॥ २ ॥

ॐ ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोष रहिताय षट्चत्वारिंशद्गुण सहिताय अर्हत्परमेष्ठिने संसारतापविनाशनाय **चन्दनं** निर्वपामीति स्वाहा ।

ओं ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय संसारतापविनाशनाय **चन्दनं** निर्वपामीति स्वाहा ॥

ओं ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्यो पाध्यायसर्व साधुभ्यः संसारतापविनाशनाय **चन्दनं** निर्वपामीति स्वाहा ।

अपारसंसार महासमुद्रप्रोत्तारणे
प्राज्यतरीन् सुभक्त्या ।
दीर्घाक्षताङ्गैर्धवलाक्षतौघैर्जिनेन्द्र
सिद्धान्तयतीन्यजेऽहम् ॥ ३ ॥

ओं ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोष

रहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने अक्षयपद्‌प्राप्तये अक्षतान् निर्वपामीति स्वाहा ।

ॐ ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशाङ्गश्रुतज्ञानाय अक्षयपदप्राप्तये अक्षतान् निर्वपामीति स्वाहा ।

ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्योपाध्यायसर्वसाधुभ्योऽक्षयपदप्राप्तये अक्षतान् निर्वपामीति स्वाहा ।

विनीतभव्याब्जविबोधसूर्यान्वर्यान्
सुचर्याकथनैकधुर्यान् ।
कुन्दारविन्दप्रमुखैः प्रसूनैर्जिनेन्द्रसिद्धा-
न्तयतीन् यजेऽहम् ॥ ४ ॥

ॐ ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोषरहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने कामबाणविध्वंसनाय पुष्पं निर्वपामीति स्वाहा ।

ॐ ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय

कामबाणविध्वंसनाय पुष्पं निर्वपामीति स्वाहा ।

ओं ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्यो पाध्यायसर्वसाधुभ्यः काम बाणविध्वंसनाय पुष्पं निर्वपामीति स्वाहा ।

कुदर्पकन्दर्पविसर्पसर्पप्रसह्यनिर्णाशनवैनतेयान्
प्राज्याज्यसारैश्चरुभी रसाढ्यैर्जिनेन्द्रसिद्धा-
न्तयतीन्यजेऽहम् ॥ ५ ॥

ॐ ह्रीं चतुष्कर्मक्षयानन्तज्ञानचतुष्टये अष्टादशदोष रहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने क्षुधारोगविनाशनाय नैवेद्यं निर्वपामीति स्वाहा ।

ॐ ह्रीं जिनमुखोद्भूतस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय क्षुधारोगविनाशनाय नैवेद्यं निर्वपामीति स्वाहा ।

ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्यो पाध्यायसर्वसाधुभ्यः क्षुधारोग विनाशनाय नैवेद्यं निर्वपामीति स्वाहा ।

ध्वस्तोद्यमान्धीकृतविश्वविश्वमोहान्धकार
प्रतिघातदीपान् ।
दीपैः कनत्काञ्चनभाजनस्थैर्जिनेन्द्र
सिद्धान्तयतीन् यजेऽहम् ॥ ६ ॥

ओं ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोष रहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने मोहान्धकारविनाशनाय दीपं निर्वपामीति स्वाहा ।

ओं ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय मोहान्धकारविनाशनाय दीपं निर्वपामीति स्वाहा।

ओं ह्रीं सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्रा-त्रिगुणविराजमानाचार्योपाध्यायसर्वसाधुभ्यो मोहान्धकारविनाशनाय दीपं निर्वपामीति स्वाहा

दुष्टाष्टकर्मेन्धनपुष्टजालसंधूपने भासुरधूमकेतून् ।
धूपैर्विधूतान्यसुगन्धगंधैर्जिनेन्द्र सिद्धांतयतीन् यजेऽहम् ॥ ७ ॥

ॐ ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोषरहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने अष्टकर्मदहनाय धूपं निर्वपामीति स्वाहा ॥

ॐ ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय अष्टकर्मदहनाय धूपं निर्वपामीति स्वाहा ॥

ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्योपाध्यायसर्वसाधुभ्यः अष्टकर्मदहनाय धूपं निर्वपामीति स्वाहा॥

क्षुभ्यद्विलुभ्यन्मनसामगम्यान्
कुवादिवादास्खलितप्रभावान् ।
फलैरलं मोक्षफलाभिसारै
जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥ ८ ॥

ॐ ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोषरहिताय षट्चत्वारिंशद्गुण सहिताय अर्हत्परमेष्ठिने मोक्षफलप्राप्तये फलं निर्वपामीति स्वाहा ।

ओं ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशांगश्रुतज्ञानाय मोक्षफलप्राप्तये फलं निर्वपामीति स्वाहा ॥

जिने भक्तिर्जिने भक्तिर्जिने भक्तिः सदाऽतु मे ।
सम्यक्त्वमेव संसारवारणं मोक्षकारणम् ॥ ७ ॥

पुष्पअंजुलि क्षेपनकरना

श्रुते भक्तिः श्रुते भक्तिः श्रुते भक्तिः सदास्तुमे ।
सद्ज्ञानमे संसारवारणं मोक्षकारणम् ॥ ८ ॥

पुष्पक्षेपनकरना

गुरौ भक्तिर्गुरौ भक्तिर्गुरौ भक्तिः सदाऽस्तु मे ।
चारित्रमेव संसारवारणं मोक्षकारणम् ॥ ९ ॥

पुष्पक्षेपनकरना

## देवजयमाला प्राकृत

वत्ताणुट्ठाणे जणधणुदाणे पइपोसिउ तुहु खत्त धरू ।
तुहु चरण विहाणे केवलणाणे तुहु परमप्पउ परम परू ॥ १ ॥
जयरिसहरिसीसरणमियपाय। जय अजिय जियंगमरोसराय।
जय संभव संभवकय विओय। जय अहिणंदणणंदिय पओय २
जय सुमइ सुमइ सम्मइपयास। जय पउमप्पह पउमाणिवास।
जय जयहि सुपास सुपासगत्त। जय चंदप्पह चंदाहवत्त ॥ ३ ॥

जयपुप्फयंत दंतं तरंग । जय सीयल सीयलवयणभंग ।
जयसेय सेयकिरणोहसुज्ज । जयवासुपुज्ज पुज्जाणपुज्ज ॥ ४ ॥
जयविमल विमल गुणसेहि ठाण। जय जयहि अणंताणंतणाण।
जयधम्म धम्मतित्थयरसंत। जय सांति २ विहियायवत्त ॥ ५ ॥
जय कुंथु कुंथुपहुअंगिसदय।जय अरअरमाहर विहियसमय ।
जयमल्लिमल्लि आदाम गंध। जयमुणिसुव्वय सुव्वयणिवंध६॥
जयणमि णमियामरणियरसामि। जयणेमिधम्मरहचक्कणेमि ।
जय पासपासछिंदणाकिवाण । जसवड्ढमाण ॥ ७ ॥
इहजाणियणामहिं,दुरियविरामहिं परहिंविणमियसुरावलिहिं ।
अणहणहिंअणाइहिं,सामियकुवाइहिं,पणविवि अरहंतावलिहिं८
ॐ ह्रीं वृषभादिमहावीरान्तेभ्योऽर्घमहार्घं निर्वपामीति स्वाहा ९
ॐ ह्रीं वृषभादिवर्द्धमानपर्यंततीर्थंकरेभ्योअर्घं निर्वपामीतिस्वाहा।

## शास्त्रजयमाला प्राकृत

संपइ सुहकारण, कम्मवियारण, भवसमुद्दतारणतरणं।
जिणवाणि णमस्सामि, सत्तपयासमि,सग्गमोक्खसंगम करणं१
जिणंद मुहाओविणिग्गयतार । गणिंद विगुंफिय गंथपयार ।
तिलोयहिमंडण धम्मह खाणि ।
सया पणमामि जिणिंदहवाणि ॥ २ ॥

अवग्गह ईह अवाय जुएहि । सुधारणभेयहिं तिण्णि सएहि ।
मइ छत्तीस बहुप्पमुहाणि । सया पणमामि जिणिंदहवाणि ३
सुदं पुण दोण्णि अणेयपयार । सुबारहभेय जगत्तयसार ।
सुरिंदणरिंदसमच्चिओ जाणि ।
मया पणमामि जिणिंदहवाणि ॥ ४ ॥
जिणिंद गणिंद णरिंदहरिद्धि । पयासइ पुण्णपुराकि उलद्धि ।
णिउग्गुपहिल्लउ एहु वियाणि ।
सया पणमामि जिणिंदहवाणि ॥ ५ ॥
जुलोय अलोयह जुत्ति जणेइ । जुतिण्णविकाल सरूव भणेइ ।
चउग्गइलक्खण दुज्ज उजाणि ।
सया पणमामि जिणिंदहवाणि ॥ ६ ॥
जिणिंद चरित्तविचित्तमुणेइ । सुसावयधम्महिं जुत्ति जणेइ ।
णिउग्गु वितिज्जउ इत्थु वियाणि ।
सया पणमामि जिणिंदहवाणि ॥ ७ ॥
सुजीव अजीवह तच्चह चक्खु । सुपुण्ण विपाव विबंध वि मुक्खु ।
चउत्थु णिउग्गु विभासियणाणि । सया पणमामि जिणिंदहवाणि ८
तिभेयहि ओहि विणाण विचित्तु । चउत्थु रिजो विउलंमइ उत्तु ।
सुखाइय केवलणाण विहाणि । सया पणमामि जिणिंदहवाणि ९

जिणिंदह णाणु जगत्तयभाणु। महात्तमणासिय सुक्खणिहाणु।
पयच्चहु भत्तिभरेणवियाणि। सयापणमामि जिणिंदहवाणि १०
पयाणि सुबारहकोडिसयेण। सुलक्खतिरासिय जुत्तिभरेण।
सहस्सअठावण पंच वियाणि।
सया पणमामि जिणिंदह वाणि॥ ११॥
इकावण कोडिउ लक्ख अठेव। सहस चुलसी दसया छक्केव।
सढाइगवीसह गंथपयाणि। सया पणमामि जिणिंदहवाणि १२
इह जिणवरवाणि विसुद्धमई। जो भवियण णियमणधरई।
सो सुरण रिंदसंपय लहिहि। केवलणाण विउत्तरई॥ १३॥
ॐ ह्रीं जिनमुखोद्भवस्याद्वादनयगर्भितद्वादशाङ्गश्रुतज्ञानाय अर्घं निर्वपामीति स्वाहा।
ॐ ह्रीं श्री सरस्वती वाग्वादिनी द्वादशांग श्रुतज्ञानेभ्यो अर्घं निर्वपामीतिस्वाहा-

## गुरुजयमाला प्राकृत।

भवियह भवतारण, सोलह कारण, अज्जवि तित्थयर त्तणहं।
तव कम्म असंगइ दयधम्मंगइ पालवि पंच महाव्वयहं॥१॥
वंदामि महारिसि सीलवंत। पंचेंदिय संजम जोग जुत्त।

जे गारहअंगह अणुसरंति । जे चउदहपुव्वह मुणि थुणंति ॥२॥
पादाणु सारवर कुट्ठबुद्धि । उप्पुण्णजाह आयासरिद्धि ।
जे पाणाहारी तोरणीय । जे रुक्खमूल आतावणीय ॥३॥
जें मोणिधाय चंदाहणीय । जे जत्थत्थवणि णिवासणीय ।
जे पंचमहव्वय धरणधीर । जे सुमिति गुत्ति पालणह वीर ॥४॥
जे बड्ढाहि देह विरत्तचित्त । जे रायरोसभयमोहचत्त ।
जे कुगइहि संवरु विगयलोह । जे दुरियविणासण कामकोह ५
जे जल्लमल्ल तिणालित्त गत्त । आरंभ परिग्गह जे विरत्त ।
जे तिण्णकाल वाहर गमंति । छट्ठट्ठम दसमउ तउचरंति ६
जे इक्कगास दुइगास लिंति । जे णीरसभोयण रइकरांति ।
ते मुणिवर वंदउ ठियमसाण । जे कम्मडहइ वर सुक्कझाण ॥७॥
वारहविह संजम जे धरंति । जे चारिव विकहा परहरंति ।
वावीस परीसह जे सहंति । संसारमहण्णउ ते तरंति ॥८॥
जे धम्मबुद्धि महियलि थुणंति । जे काउस्सग्गो णिस गमंति ।
जे सिद्धिविलासणि अहिलसंति । जे पक्खमास आहार लिंति९
गोदूहण जे वीरासणीय । जे धणुह सेज वज्जासणीय ।
जे तववलेण आयासजंति । जें गिरिगुहकंदर विवरथंति १०
जे सत्तुमित्त समभाव चित्त । ते मुणिवर वंदउ दिढ चरित्त ।

चउवीसह गंथह जे विरत्त। ते मुणिवरवंदउजगपवित्त ॥११॥
जे सुज्झाणिज्झा एकचित्त । वंदामि महारिसि मोक्खपत्त।
रयणत्तयरंजिय सुद्धभाव। ते मुणिवरवंदउ ठिदि सहाव १२
जे तपसूरा, संजमधीरा, सिद्धवधूअणुराइया।
रयणत्तयरंजिय, कम्महगंजिय, ते रिसिवर मइ झाइया १३

ओं ह्रीं सम्यग्दर्शनज्ञानचारित्रादि गुणविराजमानाचार्यो पाध्यायसर्वसाधुभ्योऽर्घं महार्घं निर्वपामीतिस्वाहा।

# विहरमानविंशति तीर्थंकरपूजा

श्रीमन्मेरुसुदर्शनादिसविधेयेसन्तिशक्रांचिताः,
जम्बूधातकिपुष्करार्द्धवितनुक्षेत्रेष्विदानींजिनाः।
तानश्रीमंधरपूर्वविंशतिजिनान्संवौषडाह्वाननै,
श्रायेस्मिन्भरतेमुदार्यशकलेपूर्वादिदिग्भागतः १॥

ओं ह्रीं अर्हं श्रीपंचविदेहक्षेत्रवर्तमान श्रीसीमंधरादिविंशति तीर्थंकर! समूह! अत्र अवतर अवतरसंवौषट्

ओं ह्रीं अर्हं श्रीपंचविदेहक्षेत्रवर्तमानश्रीसीमंधरादिविंशति तीर्थंकर समूह! अत्रतिष्ठतिष्ठ। ठः ठः।

ओं ह्रीं अर्हं श्रीपंचविदेहक्षेत्रवर्तमान श्रीसीमंधरादिविंशति तीर्थंकरसमूह अत्रममसन्निहितोभवभव । वषट् ।

शीतादितोयैःस्वजडत्वहान्यै,
धाराछलात्पादयुगेपतद्भिः ।
सीमंधरादीनिहवर्तमानां,
श्चायेऽष्टधातीर्थकरांस्त्रिशुद्धया ॥ १ ॥

ओं ह्रीं श्रीपरमब्रह्मभ्योनंतानंतज्ञानशक्तिभ्यःसीमंधरयुगमंधर वाहु सुवाहु संजातक स्वयंप्रभ ऋषभानन अनन्तवीर्य सूरप्रभ विशालकीर्ति वज्रधर चन्द्रानन चन्द्रबाहु भुजंगमेश्वर नेमप्रभ वीरषेण महाभद्र देवयशः जितवीर्य विंशतिविद्यमानतीर्थंकरेभ्योजन्मजरामृत्युविनाशनाय जलं निर्वपामीति स्वाहा ।

श्रीखंडकृष्णागुरुगंधसारैः,
श्लेष्मादिभीत्याशरणंगतैर्वा ।
सीमंधरादीनिहवर्तमानां,
श्चायेऽष्टधातीर्थकरांस्त्रिशुद्धया ॥ २ ॥

ओं ह्रीं विंशतिविद्यमानतीर्थंकरेभ्योभवातापविनाशनाय चंदनं निर्वपामीति स्वाहा।

उलूखलायोग्रजघातभीतै,
रिवाक्षतैरक्षतभावकांक्षैः।
सीमंधरादीनिहवर्तमानां,
श्चायेऽष्टधातीर्थकरांस्त्रिशुद्धया ॥ ३ ॥

ओं ह्रीं विंशति विद्यमानतीर्थकरेभ्यो भवातापविनाशनाय अक्षतान निर्वपामीतिस्वाहा।

पुष्पैर्विचित्रै र्व्रतिनाम लभ्यैः, स्वैरंपतद्भिर्भवभाव भीतैः। सीमंधरादी निहवर्त मानांश्चायेऽष्टधातीर्थ करांस्त्रि शुद्धया ॥ ४ ॥

ओं ह्रीं विंशति विद्यमानतीर्थ करेभ्यो कामबाण विध्वंशनाय पुष्पं निर्वपामीतिस्वाहा।

कुर्वद्भिरन्यैः सुनिवेद्यकैः किं,
तथापि शोभार्थ मपूप मुख्यैः।

सीमंधरादी निहवर्त मानां,
स्थायेऽष्ट धातार्थ करांस्त्रि शुद्धया ॥ ५ ॥

ओं ह्रीं विंशति विद्यमानतीर्थ करेभ्यो क्षुधारोग विनाशनाय नैवेद्यं निर्व पामीति स्वाहा ॥

पूत्कर्तु मेतैर्म वभीति तोग्नि,
कार्ये रिवोद्योतमिषेण दीपैः ।
सीमं धरादी निहवर्त मानां,
स्थायेऽष्ट धातार्थ करांस्त्रिशुद्धया ॥ ६ ॥

ओं ह्रीं विंशति विद्यमानतीर्थकरेभ्यो मोहांधकारविनाशनाय दीपं निर्वपामीति स्वाहा ॥

धूपैर धूर्तैर्विविधैरर्पामै,
स्तयोग्नि कर्म धनभावभूतैः ।
सीमंधरादी निहवर्त मानां,
स्थायेऽष्ट धातार्थ करां स्त्रि शुद्धया ॥ ७ ॥

ओं ह्रीं विंशति विद्यमान तीर्थ करेभ्यो अष्टकर्म दहनाय धूपं निर्व पामीति स्वाहा ॥

अनामयानैः सुफलै प्रधानै
रिष्ट प्रदानैर्वृजिनावसानैः ।
सीमंधरादी निहवर्त मानां ।
स्त्वायेऽष्ट धातीर्थ करांस्त्रिशुद्ध्या ॥ ८ ॥

ओं ह्रीं विंशति विद्यमान तीर्थ करेभ्यो मोक्षफल प्राप्तये फलं निर्व पामीति स्वाहा

अनर्घ्य मर्घं त्रिजगद्वि भूते,
रर्थंददे देव गणार्चितेभ्य ।
भक्त्या सुपुष्पां जलितोपगंधा
क्षतप्रसूनैश्च रुद्दीप धूपैः

ओं ह्रीं विंशति विद्यमान तीर्थकरेभ्यो अनर्घ पदप्राप्तये अर्घं निर्व पामीति स्वाहा

जयमाला ॥

येषांगर्भावतारात्कनकमयमहीप्रागभूच्छक्रशिष्ट्या,
जन्मोत्साहंसुरागेषुचविदधुररंसांगनासामराद्राक ।

निर्वेदे ब्रह्मदेवाः स्तुतिशतमुखराः केवलार्के त्रिलोकी।
प्रादुर्भूतप्रमोदा जयजयजयवाग्भूषणस्याविश्रांति १

जयसीमंधरकृतसुकृतसीम जययुगंमधरजितमोहभीम
जयवाहुजिनेश्वरसुगुणवास ।
वरवाहु जिनेशदयाविलास ॥ २ ॥

गुणमणिनिधानसंजातदेव ।
स्वायंप्रभं जयकृतविवुधसेव ।
ऋषभेश्वरजयवृषधरणधीर त्वमनंतवीर्यमंगलकरीर ३
जयजयसूरप्रभवोधसूर । जयदेवविशालगुणाब्धिपूर।
जयपाविधर गुणधरविमलशील ।
चंद्राननजयकृतमुक्तिलील ॥ ४ ॥
श्रीचंद्रवाहुजिनविदितहेय भुजगेशचक्रिगणवैनतेय।
ईश्वरजिनराजमहानुभाव नेमिप्रभकर्माण्यदाव ५
जयवीरसेनविषयारिवीर जयमहाभाग्ययोगैकधीर।

जयजयदेवगुणैकधाम। जितकर्मजिनेशयथार्थनाम ६

एतेतीर्थकरादिशं तुकमलांमुक्त्वास्वपुण्यंचते,
निर्वास्यंति जगत्रयेहितकराःसेव्यास्त्रिलोकीशिभिः
शिष्टेःश्रीजगदादिकीर्तिगणिनांभट्टारकानामुदा,
पूजाकारिनरेंद्रकीर्तिसुगुरोःशीष्येणवादीशिना ७

ओं ह्रीं विदेहक्षेत्र विंशतिविद्यमानतीर्थंकरेभ्योअर्घमहा र्घंनिर्वपामीतिस्वाहा ।

कृत्याकृत्रिमचारुचैत्यनिलयान्नित्यं त्रिलोकीं गतान्
वन्दे भावनव्यन्तरान्द्युतिवरान्कल्पामरान्सर्वगान् ।
सद्गन्धाक्षतपुष्पदामचरुकैर्दीपैश्च धूपैः फलैर्
नीराद्यैश्च यजे प्रणम्य शिरसा दुःकर्मणां शान्तये १

ओं ह्रीं कृत्रिमाकृत्रिमचैत्यालयसम्बन्धिजिनबिम्बेभ्योऽर्घं महार्घं निर्वपामीति स्वाहा ।

वर्षेषु वर्षान्तरपर्वतेषु नन्दीश्वरे यानि च मन्दरेषु ।
यावन्ति चैत्यायतनानि लोके सर्वाणि वन्दे जिनपुङ्गवानाम् ॥ १ ॥

अवनितलगतानां कृत्रिमाकृत्रिमाणां
वनभवनगतानां दिव्यवैमानिकानाम् ।
इह मनुजकृतानां देवराजार्चितानाम्
जिनवरनिलयानां भावतोऽहं स्मरामि ॥ २ ॥

जम्बूधातकिपुष्करार्द्धवसुधाक्षेत्रत्रये ये भवा-
श्चन्द्राम्भोजशिखण्डिकण्ठकनकप्रावड्घनाभाजिनाः
सम्यग्ज्ञानचरित्रलक्षणधरा दग्धाष्टकर्मेन्धनाः
भूतानागतवर्त्तमानसमये तेभ्यो जिनेभ्यो नमः ३

श्रीमन्मेरौ कुलाद्रौ रजतगिरिवरे शाल्मलौ जम्बुवृक्षे
वक्षारे चैत्यवृक्षे रतिकररुचिके कुण्डले मानुषांके ।
इक्ष्वाकारेऽञ्जनाद्रौ दधिमुखशिखरे व्यन्तरे स्वर्गलोके
ज्योतिर्लोकेऽभिवन्दे भुवनमहितले यानि
चैत्यालयानि ॥ ४ ॥

द्वौ कुन्देन्दुतुषारहारधवलौ द्वाविन्द्रनीलप्रभौ
द्वौ बन्धूकसमप्रभौ जिनवृषौ द्वौ च प्रियङ्गुप्रभौ ॥

शेषाः षोडशजन्ममृत्युरहिताः सन्तप्तहेमप्रभास्
ते संज्ञानदिवाकराः सुरनुताः सिद्धिं प्रयच्छन्तु नः ५

( पुष्पांक्षेपनकरना। )

इच्छामिभंते-चेइयभभत्ति काओसग्गो कओ तस्सालोचेओ अहलोय तिरियलोय उढ्ढलोयम्मि किट्टिमाकिट्टिमाणि जाणि जिणचेइयाणि ताणि सव्वाणि । तीसुवि लोएसु भवणवासियवाणविं-तरजोयसिय कप्प वासियत्ति चउविहा देवा सपरिवारा दिव्वेण गंधेण दिव्वेण पुप्फेण धुव्वेण दिव्वेण चुण्णेण दिव्वेण वासेण दिव्वेण ह्णाणेण। णिच्चकालं अच्चंति पुज्जंति वंदंति णमस्संति । अहमवि इह संतोतत्थसंताइ णिच्चकालं अञ्चेमि पुज्जामि वंदामि णमस्सामि। दुक्खक्खओ कम्म क्खओ बोहिलाहो सुगइगमणं समाहि मरणं जिणगुणसंपत्ति होउ मज्झं ।

अथ पूर्वाह्निक मध्याह्निकअपराह्निक देववंदनायां पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावन्दनास्तवसमेतं श्रीपञ्चमहागुरुभक्तिकार्योत्सर्गं करोम्यहं ।

णमो अरहंताणं, णमो सिद्धाणं णमो आयरीयाणं।
णमो उवज्झायाणं, णमोलोए सव्वसाहूणं ॥ ११ ॥
ताव कायं पावकम्मं दुच्चरियं वोस्सरामि ।

इसप्रकार णवकारमंत्रका नवबार कायोत्सर्गपूर्वक जाप्यकरना-

# सिद्धपूजा

ऊर्ध्वाधोरयुतं सबिन्दुसपरं ब्रह्मस्वरावेष्टितं
वर्गापूरितदिग्गताम्बुजदलं तत्सान्धितत्वान्वितम् ।
अन्तःपत्रतटेष्वनाहतयुतं ह्रींकारसंवेष्टितम्
देवं ध्यायति यः स मुक्तिसुभगो वैरीभकण्ठीरवः ॥

ॐ ह्रीं श्रीसिद्धचक्राधिपते ! सिद्धपरमेष्ठिन अत्र अवतर अवतर । संवौषट् ।

ॐ ह्रीं सिद्धचक्राधिपते ! सिद्धपरमेष्ठिन अत्र तिष्ठ तिष्ठ। ठः ठः

ओं ह्रीं सिद्धचक्राधिपते ! सिद्धपरमेष्ठिन अत्र मम सन्निहितो भवभव । वषट् ।

निरस्तकर्मसम्बन्धं सूक्ष्मं नित्यं निरामयम् ।
वन्देऽहं परमात्मानममूर्त्तमनुपद्रवम् ॥ १ ॥

( ऐसा कहकर सिद्धयन्त्रकी स्थापना करना चाहिये )

सिद्धौ निवासमनुगं परमात्मगम्यं
हानादिभावरहितं भववीतकायम् ।
रेवापगावरसरोयमुनोद्भवानां
नीरैर्यजे कलशगैर्वरसिद्धचक्रम् ॥ १ ॥

ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने जन्ममृत्युविनाशनाय जलं निर्वपामीति स्वाहा

आनन्दकन्दजनकं घनकर्ममुक्तं
सम्यक्त्वशर्मगरिमं जननार्तिवीतं ।

सौरभ्यवासितभुवं हरिचन्दनानां
गन्धैर्यजे परिमलैर्वरसिद्धचक्रम् ॥ २ ॥

ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने संसारतापविनाशनाय चन्दनं निर्वपामीति स्वाहा ।

सर्वावगाहनगुणं सुसमाधिनिष्ठं
सिद्धं स्वरूपनिपुणं कमलं विशालम् ।
सौगन्ध्यशालिवनशालिवराक्षतानाम्
पुञ्जैर्यजे शशिनिभैर्वरसिद्धचक्रम् ॥ ३ ॥

ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने अक्षयपदप्राप्तये अक्षतान् निर्वपामीति स्वाहा ।

नित्यं स्वदेहपरिमाणमनादिसंज्ञम्
द्रव्यानपेक्षममृतं मरणाद्यतीतम् ।
मन्दारकुन्दकमलादिवनस्पतीनाम्
पुष्पैर्यजे शुभतमैर्वरसिद्धचक्रम् ॥ ४ ॥

ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने कामबाणविध्वंसनाय पुष्पं निर्वपामीति स्वाहा ।

ऊर्ध्वस्वभाव गमनं सुमनोव्यपेतम् ।
ब्रह्मादिबीजसहितं गगनावभासम् ।
क्षीरान्नसाज्यवटकैरसंपूर्णगर्भैर्-
नित्यं यजे चरुवरैर्वरसिद्धचक्रम् ॥ ५ ॥

ॐ ह्रीं सिद्ध चक्राधिपतये सिद्धपरमेष्ठिने क्षुधारोगविध्वंसनाय नैवेद्यं निर्वपामीति स्वाहा

आतंक शोकभयरोगमदप्रशान्त
निर्द्वन्द्वभावधरणं महिमानिवेशम् ।
कर्पूरवार्तिबहुभिः कनकावदातैर्
दीपैर्यजे रुचिवरैर्वरसिद्धचक्रम् ॥ ६ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने मोहान्धकार विनाशनाय दीपं निर्वपामीति स्वाहा ।

पश्यन्समस्तभुवनं युगपन्नितान्तम्
त्रैकाल्यवस्तुविषये निविडप्रदीपम् ।
सद्द्रव्यगन्ध घनसारविमिश्रितानां
धूपैर्यजे परिमलैर्वरसिद्धचक्रम् ॥ ७ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने अष्टकर्मदहनायधूपं निर्वपामीति स्वाहा ।

सिद्धासुरादिपतियक्षनरेन्द्रकैर्
ध्येयं शिवं सकलभव्यजनैःसुवन्द्यम् ।
नारिङ्गपूग कदली फलनालिकैरः
सोऽहंयजे वरफलैर्वर सिद्धचक्रम् ॥ ८ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने मोक्षफलप्राप्तये फलं निर्वपामीतिस्वाहा ।

गन्धाढ्यं सुपयोमधुव्रतगणैः संगं वरं चन्दनम्
पुष्पौघं विमलं सदक्षतचयं रम्यं चरुं दीपकम् ।
धूपं गन्धयुतं ददामि विविधं श्रेष्ठं फलं लब्धये
सिद्धानांयुगपत्क्रमायविमल सेनोत्तरंवांछितम् ?

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने अनर्घ्यपदप्राप्तये अर्घं निर्वपामीति स्वाहा ।

ज्ञानोपयोगविमलं विशदात्मरूपम्
सूक्ष्मस्वभावपरम यदनन्तवीर्यम् ।

कर्मौघकक्षदहनं सुखशस्यबीजम्
वन्दे सदा निरुपम वरसिद्धचक्रम् ॥ १०

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने महार्घं निर्वपामीति स्वाहा ।

## जयमाला

त्रैलोक्येश्वरवन्दनीयचरणाः प्रापुःश्रियं शाश्वतीम्
यानाराध्यनिरुद्धचण्डमनसःसन्तोऽपि तीर्थंकराः
सत्सम्यक्त्वविबोधवीर्य्यविशदाव्याबाधताद्यैर्गुणैर्
युक्तांस्तानिहतोष्टवीमिसततंसिद्धान्
विशुद्धोदयान् ॥ १० ॥

( पुष्पअंजुलिक्षेपनकरना )

## जयमाला

विराग सनातन शान्त निरंश । निरामय निर्भय निर्मलहंस ॥
सुधाम विबोधनिधान विमोह । प्रसीद विशुद्ध सुसिद्धसमूह १॥
विदूरितसंसृतभाव निरंग । समामृतपूरित देव विसंग ॥
अबंध कषायविहीनविमोह । प्रसीद विशुद्धसुसिद्धसमूह २॥

निवारितदुःकृतकर्मविपास । सदामलकेवलकोलिनिवास ॥
भवोदधिपारग शान्त विमोह । प्रसीदविशुद्धसुसिद्धसमूह ३॥
अनन्तसुखामृतसागरधीर । कलंकरजोमल भूरि समीर ॥
विखण्डितकाम विरामविमोह । प्रसीद विशुद्धसुसिद्धसमूह ४
विकारविवर्जिततर्जितशोक । विबोधसुनेत्र विलोकितलोक ॥
विहार विराव विरंगविमोह । प्रसीदविशुद्धसुसिद्धसमूह ॥५॥
रजोमलखेदविमुक्ति विगात्र । निरन्तरनित्य सुखामृतपात्र ॥
सुदर्शनराजितनाथ विमोह । प्रसीदविशुद्धसुसिद्धसमूह६ ॥
नरामरवन्दित निर्मलभाव । अनन्तमुनीश्वरपूज्य विहाव ॥
सदोदय विश्वमहेश विमोह। प्रसीद विशुद्ध सुसिद्धसमूह ॥७॥
विदंभ वितृष्ण विदोष विनिद्र । परापर शंकर सार वितन्द्र॥
विकोप विरूप विशंक विमोह । प्रसीद विशुद्धसुसिद्धसमूह।८
जरामरणोज्झित वीतविहार । विचिंतितनिर्मल निरहंकार ॥
अचिन्त्यचरित्र विदर्प विमोह । प्रसीद विशुद्धसुसिद्धसमूह।९
विवर्ण विगन्ध विमानविलोभ। विमायविकायविशब्दविशोभ॥
अनाकुल केवल सर्व विमोह। प्रसीदविशुद्धसुसिद्धसमूह।१०।
असमसमयसारंचारुचैतन्य चिह्नं परपरणतिमुक्तं पद्मनन्दीन्द्र

न्थम् ॥ निखिलगुणनिकेतं सिद्धचक्रं विशुद्धं स्मरति नमति यो वास्तौति सोऽभ्येति मुक्तिम् ॥ ११ ॥

ॐ ह्रीं सिद्धपरमेष्ठिभ्यो अर्घं महार्घं निर्वपामीति स्वाहा॥

अविनाशी अविकार परमरसधामहो ।
समाधान सर्वज्ञ सहज अभिरामहो
शुद्ध बोध अविरुद्धअनादिअनंतहो ॥
जगत शिरोमणिसिद्धसदाजयवंतहो ॥ १ ॥
ध्यानअगनिकर कर्म कलंक सबैदहे ।
नित्य निरंजन देव सरूपी होरहे। ।
ज्ञायकके आकार ममत्वनिवारि कै
सो परमातम सिद्ध नमूंसिरनायकै ॥२॥

दोहा–अविचलज्ञानप्रकाशतैं गुणअनंतकी खान।
ध्यानधरै सो पाइये परमसिद्ध भगवान ॥

इत्याशीर्वादः ( पुष्प क्षेपन करना )

# भावाष्टकम्

निजमनोमणिभाजनभारया समरसैकसुधारसधारया ।
सकलबोधकलारमणीयकं सहज सिद्ध महं परपूजये ॥१॥
ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने जन्ममृत्युविनाशनायजलं निर्वपामीति स्वाहा

सहज कर्मकलंक विनाशनैरमलभावसुभासितचन्दनैः ।
अनुपमानगुणावलिनायकं सहजसिद्धमहं परपूजये ॥ २ ॥
ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने संसारतापविनाशनाय चन्दनंनिर्वपामीति स्वाहा

सहजभावसुनिर्मलतन्दुलैः सकलदोष विशालविशोधनैः ।
अनुपरोध सुबोध निधानकं सहज सिद्धमहं परिपूजये ॥ ३ ॥
ओं ह्रीं सिद्ध चक्राधिपतये परमेष्ठिने अक्षयपदप्राप्तये अक्षतान् निर्वपामीति स्वाहा

समयसारसुपुष्पसुमालया सहजकर्म करेण विशोधया ।
परमयोग बलेन वशीकृतं सहजसिद्धमहंपरिपूजये ॥ ४ ॥
ओं ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने कामबाणविध्वंसनायपुष्पंनिर्वपामीति स्वाहा

अकृत बोधसुदिव्यनिवेद्कैर्विहितजात जरामरणान्तकैः

निरवधिप्रचुरात्मगुणालयं सहजसिद्धमहं परिपूजये ॥ ५ ॥

ओं ह्रीं सिद्ध चक्राधिपतये शिद्धपरमेष्ठिने क्षुधारोगविध्वंसनायनैवेद्यं निर्वपामीतिं स्वाहा

सहजरत्नरुचिप्रतिदीपकै रुचिविभूतितमः प्रविनाशनैः ।

निरवधिस्वविकाशविकाशनैः सहजसिद्धमहं परिपूजये ॥६ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने मोहान्धकारविनाशनाय दीपंनिर्वपामीतिस्वाहा ।

निजगुणाक्षयरूपसुधूपनैः स्वगुणघातमलप्रविनाशनैः ।

बिशदबोधसुदीर्घसुखात्मकं सहजसिद्धमहं परिपूजये ॥ ७ ॥

ओं ह्रीं सिद्धचक्राधिपतयेसिद्धपरमेष्ठिने ॥ अष्टकर्मदहनाय धूपम्निर्वपामीतिस्वाहा

परमभावफलावलिसम्पदा सहजभावकुभावविशोधया ।

निजगुणाऽऽस्फुरणात्मनिरञ्जनं सहजसिद्धमहं परिपूजये८॥

ओं ह्रीं सिद्धचक्राधिपतयेसिद्धप मेष्ठिने मोक्षफलप्राप्तये फलंनिर्वपामीतिस्वाहा

नेत्रोन्मीलिविकाशभावनिवहैरत्यन्तबोधाय वै

वार्गन्धाक्षतपुष्पदामचरूकैः संदीपधूपैः फलैः
यश्चिन्तामणिशुद्धभावपरमज्ञानात्मकैरर्चयं
सिद्धान्स्वादुमगाधबोधमचलंसंचर्चयामोवयम् ९

ॐह्रीं सिद्धचक्राधिपतयेसिद्धपरमेष्ठिनेअनर्घ्यपदप्राप्तये अर्घंनिर्वपामीतिस्वाहा

(इसकेपश्चात् फिर उपर्युक्तवहीजयमाला बोलनी)

## सोलहकारणका अर्घ

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः
धवलमंगलगानरवाकुले जिनगृहे जिनहेतुमहं
यजे ॥ १ ॥

ओं ह्रीं दर्शन विशुद्धयादि षोडशकारणेभ्यो अर्घं निर्वपामीति स्वाहा ।

## दशलक्षणधर्मका अर्घ

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः
धवलमंगलगानरवाकुले जिनगृहे
जिनधर्म महं यजे ॥ २ ॥

ओं ह्रीं अर्हन्मुखकमल समुद्भव उत्तमक्षमामार्दवार्ज्जवसत्यशौच संयमतपस्त्यागाकिञ्चन्यब्रह्मचर्य्य दशलाक्षणिकधर्मेभ्योऽर्घं निर्वपामीति स्वाहा ॥

## रत्नत्रयका अर्घ

उदकचन्दनतन्दुल पुष्पकैश्चरुसुदीप सुधूपफलार्घकः। धवलमंगल गानरवाकुले जिनगृहे जिन रत्न महं यजे ॥ ३ ॥

ओं ह्रीं अष्टाङ्ग सम्यग्दर्शनाय अष्टविधसम्यग्ज्ञानाय त्रयोदश प्रकारसम्यक् चारित्राय अर्घं निर्वपामीति स्वाहा ।

## अथ पञ्चपरमेष्ठिजयमाला प्राकृत

मणुयणा इन्द सुरधरियछत्तत्तया । पंचकल्लाण सुक्खावली पत्तया ॥ दंसणं णाण झाणं अणंतं वलं । ते जिणा दिंतु अह्मं वरं मंगलं ॥ १ ॥ जेहि झाणग्गिवाणेहि अइ थट्टयं॥ जम्मजरमरणणय रत्तयं दट्टयं ॥ जेहि पत्तं सिवं सासयं ठाणयं । ते मई दिंतु सिद्धा वरं णाणयं॥ २ ॥ पंचहाचार पंचग्गि संसाहया । बार संगाइ सुयजलहि अवगाहया ॥ मोक्ख लच्छीमहांति महंते सया । सूरिणो दिंतु मोक्खंगया

संगया ॥ ३ ॥ घोरसंसार भीमाडवीकाणणे । तिक्ख वियराल णह पाव पंचाणणे ॥ णट्ठ मग्गाण जीवाण पहदेसया । वंदिमो ते उवज्झान्य अह्मो सया ॥ ४ ॥
उग्गतवयरण करणेहि झीणं गया । धम्मवर णाण सुक्केक झाणं गया ।
णिब्भरं तव सिरीयें समालिंगया । साहओ ते महामोक्खपहमग्गया ॥ ५ ॥
एण थोत्तेण जो पंचगुरुवंदए । गुरु इसंसारघणवेल्लि सो छिंदए ॥ लहिय सो सिद्ध सुक्खाइ वर माणणं कुणइ कम्मिधणं पुंजपज्जालणं ॥ ६ ॥

अरु हा सिद्धाइरिया, उवज्झाया साधु पंचपरमेट्ठी ।
एयाण णमोकारो, भवे भवे मम सुहं दिंतु ॥ १ ॥

ॐ ह्रीं अर्हत्सिद्धाचार्योपाध्यायसर्वसाधु पंचपरमेष्ठिभ्यो-ऽर्घमहार्घं निर्वपामीति स्वाहा ।

इच्छामिभंते पंचगुरुभत्तिकाओ सग्गोकओ तस्सा लोचेओ अट्ठ महापाडिहेरसंजुत्ताणं अरहंताणं । अट्ठगुणसंपण्णाणं उड्ढलोयमिच्छयम्मि पयट्ठियाणं

सिद्धाणं। अट्ठपवयणमाउसंजुत्ताणं आइरियाणं। आयारादि सुदणाणोवदेसयाणं उवज्झायाणं। तिरयणगुणपालणरयाणं सव्वसाहूणं। णिच्चकालं अच्चेमि पूजेमि वंदामि णमस्सामि। दुःक्खक्खओ कम्मक्खओ वेहिलाहो सुगइगमणं समाहिमरणं जिणगुणसंपत्ति होउ मज्झं॥

इत्याशीर्वादः ( पुष्प क्षेपन करना )

( शान्तिपाठ बोलतेसमयदोनें हाथोंसेपुष्पवृष्टि करतेजाना )

शान्तिजिनं शशिनिर्म्मलवक्रं शीलगुणव्रतसंयमपात्रम्।
अष्टशतार्च्चितलक्षणगात्रं नौमि जिनोत्तममम्बुजनेत्रम् ॥१॥
पंचममीप्सितचक्रधराणां पूजितमिन्द्रनरेन्द्रगणैश्च।
शान्तिकरं गणशान्तिमभीप्सुः षोडशतीर्थकरंप्रणमामि॥२॥
दिव्यतरुः सुरपुष्प सुवृष्टिर्दुन्दुभिरासनयोजनघोषौ।
आतपवारणचामरयुग्मेयस्य विभाति च मण्डलतेजः॥ ३ ॥
तं जगदर्चितशान्ति जिनेन्द्रं शान्तिकरं शिरसा प्रणमामि।
सर्वगणाय तु यच्छतु शान्तिं मह्यमरं पठतेपरमांच ॥ ४ ॥

येऽभ्यर्चिता मुकुटकुण्डलहाररत्नैः शक्रादिभिः सुरगणैः स्तुतपादपद्माः। ते मज्जिनाः प्रवरवंशजगत्प्रदीपास्तीर्थंकराः सततशान्तिकरा भवन्तु ॥ ५ ॥

संपूजकानां प्रतिपालकानां यतीन्द्रसामान्यतपोधनानाम्। देशस्य राष्ट्रस्य पुरस्य राज्ञः करोतु शान्तिं भगवान् जिनेन्द्रः ६॥

क्षेमं सर्वप्रजानां प्रभवतु बलवान् धार्मिको भूमिपालः काले कालेच सम्यग्वर्षतु मघवा व्याधयो यान्तु नाशम्।
दुर्भिक्षं चौरमारीक्षणमपि जगतां मास्म भूज्जीवलोके।
जैनेन्द्रं धर्मचक्रं प्रभवतु सततं सर्वसौख्यप्रदायि ॥ ७ ॥

प्रध्वस्तघातिकर्माणः केवलज्ञानभास्कराः।
कुर्वन्तु जगतः शान्ति वृषभाद्या जिनेश्वराः ॥ ८ ॥

## प्रार्थना-

प्रथमं करणं चरणं द्रव्यं नमः

शास्त्राभ्यासो जिनपतिनुतिः संगतिः सर्वदार्यैः
सद्वृत्तानां गुणगणकथा दोषवादे च मौनम्।
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे
सम्पद्यन्तां मम भव भवे यावदेतेऽपवर्गः ॥ १०

तव पादौ ममहृदये, ममहृदयं तव पदद्वये लीनम्।
तिष्ठतु जिनेन्द्रतावद्यावान्निर्वाणसम्प्राप्तिः ॥ ११ ॥
अक्खरपयत्थहीणं मत्ताहीणं च जं मए भणियं
तं खमउ णाणदेव य मज्झवि दुःक्खक्खयं दिंतु १२॥
दुःक्खक्खओकम्मखओसमाहिमरणंचवोहिलाहोय।
ममहोउ जगतबंधव तव जिणवर चरणसरणेण १३॥

( पुष्पांजलिक्षेपनकरना )

## विसर्जन

ज्ञानतोऽज्ञानतो वापि शास्त्रोक्तं न कृतं मया।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाज्जिनेश्वर ॥ १ ॥
आह्वानं नैव जानामि नैव जानामि पूजनम् ।
विसर्जनं नैव जानामि क्षमस्व परमेश्वर ॥ २ ॥
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं तथैवच ।
तत्सर्वं क्षम्यतां देव रक्ष रक्ष जिनेश्वर ॥ ३ ॥
आहूता ये पुरा देवा लब्धभावा यथाक्रमम् ।
ते मयाऽभ्यर्चिता भक्त्या सर्वे यान्तु यथास्थितिम् ४

इति नित्यपूजाविधानं समाप्तम् ॥

सर्व प्रकार के और सब जगह के छपे हुये जैन ग्रन्थ नीचे पते पर मिलेंगे सूचीपत्र मंगाकर देखो.

पता

संस्कृत

# पंचस्तोत्रम्

जिसको

जैनसिद्धान्त प्रचारक मंडली देवबन्द

( सहारनपुर ) की तरफ से

**बाबू सूरजभानु वकील देवबन्द ने**

बी० एल० पावगी द्वारा

हितचिन्तक प्रेस बनारस में छपवाकर

प्रकाशित किया ।

प्रथमबार १००० ) सन १९०१ ( मूल्य =)

ओंनमः सिद्धेभ्यः ।

श्रीमानतुङ्गाचार्यविरचितं

# भक्तामरस्तोत्रम् ।

भक्तामरप्रणतमौलिमणिप्रभाणा-

मुद्द्योतकं दलितपापतमोवितानम् ।

सम्यक्प्रणम्य जिनपादयुगं युगादा-

वालम्बनं भवजले पततां जनानाम् ॥ १ ॥

यः संस्तुतः सकलवाङ्मयतत्त्वबोधा-

दुद्भूतबुद्धिपटुभिः सुरलोकनाथैः ।

स्तोत्रैर्जगत्त्रितयचित्तहरैरुदारैः

स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम् ॥ २ ॥

बुद्ध्या विनापि विबुधार्चितपादपीठ

स्तोतुं समुद्यतमतिर्विगतत्रपोऽहम् ।

बालं विहाय जलसंस्थितमिन्दुबिम्ब-

मन्यः क इच्छति जनः सहसा ग्रहीतुम् ॥ ३ ॥

वक्तुं गुणान्गुणसमुद्र शशाङ्ककान्ता-

न्कस्ते क्षमः सुरगुरुप्रतिमोऽपि बुद्ध्या ।

कल्पान्तकालपवनोद्धतनक्रचक्रं

को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ॥ ४ ॥

सोऽहं तथापि तव भक्तिवशान्मुनीश

कर्तुं स्तवं विगतशक्तिरपि प्रवृत्तः ।

प्रीत्यात्मवीर्यमविचार्य मृगो मृगेन्द्रं

नाभ्येति किं निजशिशोः परिपालनार्थम् ॥ ५ ॥

अल्पश्रुतं श्रुतवतां परिहासधाम

त्वद्भक्तिरेव मुखरीकुरुते बलान्माम् ।

यत्कोकिलः किल मधौ मधुरं विरौति

तच्चारुचूतकलिकानिकरैकहेतु ॥ ६ ॥

त्वत्संस्तवेन भवसंततिसंनिबद्धं

पापं क्षणात्क्षयमुपैति शरीरभाजाम् ।

आक्रान्तलोकमलिनीलमशेषमाशु

सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

मत्वेति नाथ तव संस्तवनं मयेद-

मारभ्यते तनुधियापि तव प्रभावात् ।

चेतो हरिष्यति सतां नलिनीदलेषु
मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥
आस्तां तव स्तवनमस्तसमस्तदोषं
त्वत्संकथापि जगतां दुरितानि हन्ति ।
दूरे सहस्रकिरणः कुरुते प्रभैव
पद्माकरेषु जलजानि विकासभाञ्जि ॥ ९ ॥
नात्यद्भुतं भुवनभूषणभूत नाथ
भूतैर्गुणैर्भुवि भवन्तमभिष्टुवन्तः ।
तुल्या भवन्ति भवतो ननु तेन किं वा
भूत्याश्रितं य इह नात्मसमं करोति ॥ १० ॥
दृष्ट्वाभा भवन्तमनिमेषविलोकनीयं
नान्यत्र तोषमुपयाति जनस्य चक्षुः ।
पीत्वा पयः शशिकरद्युति दुग्धसिन्धोः
क्षारं जलं जलनिधे रसितुं क इच्छेत् ॥ ११ ॥
यैः शान्तरागरुचिभिः परमाणुभिस्त्वं
निर्मापितस्त्रिभुवनैकललामभूत ।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत्ते समानमपरं नहि रूपमस्ति ॥ १२ ॥

वक्त्रं क्व ते सुरनरोरगनेत्रहारि
निःशेषनिर्जितजगत्त्रितयोपमानम् ।
बिम्बं कलङ्कमलिनं क्व निशाकरस्य
यद्वासरे भवति पाण्डुपलाशकल्पम् ॥ १३ ॥

संपूर्णमण्डलशशाङ्ककलाकलाप-
शुभ्रा गुणास्त्रिभुवनं तव लङ्घयन्ति ।
ये संश्रितास्त्रिजगदीश्वरनाथमेकं
कस्तान्निवारयति संचरतो यथेष्टम् ॥ १४ ॥

चित्रं किमत्र यदि ते त्रिदशाङ्गनाभि-
र्नीतं मनागपि मनो न विकारमार्गम् ।
कल्पान्तकालमरुता चलिताचलेन
किं मन्दराद्रिशिखरं चलितं कदाचित् ॥ १५ ॥

निर्धूमवर्तिरपवर्जिततैलपूरः
कृत्स्नं जगत्त्रयमिदं प्रकटीकरोषि ।
गम्यो न जातु मरुतां चलिताचलानां
दीपोऽपरस्त्वमसि नाथ जगत्प्रकाशः ॥ १६ ॥

नास्तं कदाचिदुपयासि न राहुगम्यः
स्पष्टीकरोषि सहसा युगपज्जगन्ति ।

नाम्भोधरोदरनिरुद्धमहाप्रभावः
सूर्यातिशायिमहिमासि मुनीन्द्र लोके ॥ १७ ॥
नित्योदयं दलितमोहमहान्धकारं
गम्यं न राहुवदनस्य न वारिदानाम् ।
विभ्राजते तव मुखाब्जमनल्पकान्ति
विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥
किं शर्वरीषु शशिनाह्नि विवस्वता वा
युष्मन्मुखेन्दुदलितेषु तमःसु नाथ।
निष्पन्नशालिवनशालिनि जीवलोके
कार्यं कियज्जलधरैर्जलभारनम्रैः ॥ १९ ॥
ज्ञानं यथा त्वयि विभाति कृतावकाशं
नैवं तथा हरिहरादिषु नायकेषु ।
तेज :स्फुरन्मणिषु याति यथा महत्त्वं
नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥
मन्ये वरं हरिहरादय एव दृष्टा
दृष्टेषु येषु हृदयं त्वयि तोषमेति ।
किं विक्षितेन भवता भुवि येन नान्यः
कश्चिन्मनो हरति नाथ भवान्तरेऽपि ॥ २१ ॥

स्त्रीणां शतानि शतशो जनयन्ति पुत्रा-
न्नान्या सुतं त्वदुपमं जननी प्रसूता ।
सर्वा दिशो दधति भानि सहस्ररश्मिं
प्राच्येव दिग्जनयति स्फुरदंशुजालम् ॥ २२ ॥

त्वामामनन्ति मुनयः परमं पुमांस-
मादित्यवर्णममलं तमसः परस्तात् ।
त्वामेव सम्यगुपलभ्य जयन्ति मृत्युं
नान्यः शिवः शिवपदस्य मुनीन्द्र पन्थाः ॥ २३ ॥

त्वामव्ययं विभुमचिन्त्यमसंख्यमाद्यं
ब्रह्माणमीश्वरमनन्तमनङ्गकेतुम् ।
योगीश्वरं विदितयोगमनेकमेकं
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥

बुद्धस्त्वमेव विबुधार्चितबुद्धिबोधा-
त्त्वं शङ्करोऽसि भुवनत्रयशङ्करत्वात् ।
धातासि धीर शिवमार्गविधेर्विधाना-
द्व्यक्तं त्वमेव भगवन्पुरुषोत्तमोऽसि ॥ २५ ॥

तुभ्यं नमस्त्रिभुवनार्तिहराय नाथ
तुभ्यं नमः क्षितितलामलभूषणाय ।

तुभ्यं नमस्त्रिजगतः परमेश्वराय
तुभ्यं नमो जिन भवोदधिशोषणाय ॥ २६ ॥

को विस्मयोऽत्र यदि नाम गुणैरशेषै-
स्त्वं संश्रितो निरवकाशतया मुनीश ।
दोषैरुपात्तविविधाश्रयजातगर्वैः
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥

उच्चैरशोकतरुसंश्रितमुन्मयूख-
माभाति रूपममलं भवतो नितान्तम् ।
स्पष्टोल्लसत्किरणमस्ततमोवितानं
बिम्बं रवेरिव पयोधरपार्श्ववर्ति ॥ २८ ॥

सिंहासने मणिमयूखशिखाविचित्रे
विभ्राजते तव वपुः कनकावदातम् ।
बिम्बं वियद्विलसदंशुलतावितानं
तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥

कुन्दावदातचलचामरचारुशोभं
विभ्राजते तव वपुः कलधौतकान्तम् ।
उद्यच्छशाङ्कशुचिनिर्झरवारिधार-
मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥

छत्रत्रयं तव विभाति शशाङ्ककान्त-
मुच्चैःस्थितं स्थगितभानुकरप्रतापम् ।
मुक्ताफलप्रकरजालविवृद्धशोभं
प्रख्यापयत्त्रिजगतः परमेश्वरत्वम् ॥ ३१ ॥
[ गम्भीरताररवपूरितदिग्विभाग-
स्त्रैलोक्यलोकशुभसंगमभूतिदक्षः ।
सद्धर्मराजजयघोषणघोषकः स-
न्खे दुन्दुभिर्नदति ते यशसः प्रवादी ॥ प्र० १ ॥
मन्दारसुन्दरनमेरुसुपारिजात-
संतानकादिकुसुमोत्करवृष्टिरुद्धा ।
गन्धोदबिन्दुशुभमन्दमरुत्प्रयाता
दिव्या दिवः पतति ते वचसां ततिर्वा ॥ प्र० २ ॥
शुंभत्प्रभावलयभूरिविभा विभोस्ते
लोकत्रये द्युतिमतां द्युतिमाक्षिपन्ती ।
प्रोद्यद्दिवाकरनिरन्तरभूरिसंख्या
दीप्त्या जयत्यपि निशामपि सोमसौम्याम् ॥ प्र० ३ ॥
स्वर्गापवर्गगममार्गविमार्गणेष्टः
सद्धर्मतत्त्वकथनैकपटुस्त्रिलोक्याः

दिव्यध्वनिर्भवति ते विशदार्थसर्व-
भाषास्वभावपरिणामगुणप्रयोज्यः ॥ प्र० ४ ॥ ]
उन्निद्रहेमनवपङ्कजपुञ्जकान्ती
पर्युल्लसन्नखमयूखशिखाभिरामौ ।
पादौ पदानि तव यत्र जिनेन्द्र धत्तः
पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३२ ॥
इत्थं यथा तव विभूतिरभूज्जिनेन्द्र
धर्मोपदेशनविधौ न तथापरस्य ।
यादृक्प्रभा दिनकृतः प्रहतान्धकारा
तादृक्कुतो ग्रहगणस्य विकासिनोऽपि ॥ ३३ ॥
श्च्योतन्मदाविलविलोलकपोलमूल-
मत्तभ्रमद्भ्रमरनादविवृद्धकोपम् ।
ऐरावताभमिभमुद्धतमापतन्तं
दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ॥ ३४ ॥
भिन्नेभकुम्भगलदुज्ज्वलशोणिताक्त-
मुक्ताफलप्रकरभूषितभूमिभागः ।
बद्धक्रमः क्रमगतं हरिणाधिपोऽपि
नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३५ ॥

कल्पान्तकालपवनोद्धतवह्निकल्पं
दावानलं ज्वलितमुज्ज्वलमुत्स्फुलिङ्गम् ।
विश्वं जिघत्सुमिव संमुखमापतन्तं
त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ३६ ॥

रक्तेक्षणं समदकोकिलकण्ठनीलं
क्रोधोद्धतं फणिनमुत्फणमापतन्तम् ।
आक्रामति क्रमयुगेण निरस्तशङ्क-
स्त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ३७ ॥

वल्गत्तुरङ्गगजगर्जितभीमनाद-
माजौ बलं बलवतामपि भूपतीनाम् ।
उद्यद्दिवाकरमयूखशिखापविद्धं
त्वत्कीर्तनात्तम इवाशु भिदामुपैति ॥ ३८ ॥

कुन्ताग्रभिन्नगजशोणितवारिवाह-
वेगावतारतरणातुरयोधभीमे ।
युद्धे जयं विजितदुर्जयजेयपक्षा-
स्त्वत्पादपङ्कजवनाश्रयिणो लभन्ते ॥ ३९ ॥

अम्भोनिधौ क्षुभितभीषणनक्रचक्र-
पाठीनपीठभयदोल्बणवाडवाग्नौ ।

रङ्गत्तरङ्गशिखरस्थितयानपात्रा-
त्रासं विहाय भवतः स्मरणाद्व्रजन्ति ॥ ४० ॥
उद्भूतभीषणजलोदरभारभुग्नाः
शोच्यां दशामुपगताश्च्युतजीविताशाः ।
त्वत्पादपङ्कजरजोमृतदिग्धदेहा
मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥ ४१ ॥
आपादकण्ठमुरुशृङ्खलवेष्टिताङ्गा
गाढं बृहन्निगडकोटिनिघृष्टजङ्घाः ।
त्वन्नाममन्त्रमनिशं मनुजाः स्मरन्तः
सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४२ ॥
मत्तद्विपेन्द्रमृगराजदवानलाहि-
संग्रामवारिधिमहोदरबंधनोत्थम् ।
तस्याशु नाशमुपयाति भयं भियेव
यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥
स्तोत्रस्रजं तव जिनेन्द्र गुणैर्निबद्धां
भक्त्या मया रुचिरवर्णविचित्रपुष्पाम् ।
धत्ते जनो य इह कण्ठगतामजस्रं
तं मानतुङ्गमवशा समुपैति लक्ष्मीः ॥ ४४ ॥
इति श्रीमानतुङ्गाचार्यविरचितं भक्तामरस्तोत्रम् ।

श्रीसिद्धसेनदिवाकरप्रणीतं

# कल्याणमन्दिरस्तोत्रम् ।

कल्याणमन्दिरमुदारमवद्यभेदि
भीताभयप्रदमनिन्दितमङ्घ्रिपद्मम् ।
संसारसागरनिमज्जदशेषजन्तु-
पोतायमानमभिनम्य जिनेश्वरस्य ॥ १ ॥

यस्य स्वयं सुरगुरुर्गरिमाम्बुराशेः
स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम् ।
तीर्थेश्वरस्य कमठस्मयधूमकेतो-
स्तस्याहमेष किल संस्तवनं करिष्ये ॥२॥( युग्मम् )

सामान्यतोऽपि तव वर्णयितुं स्वरूप-
मस्मादृशाः कथमधीश भवन्त्यधीशाः ।
धृष्टोऽपि कौशिकशिशुर्यदि वा दिवान्धो
रूपं प्ररूपयति किं किल घर्मरश्मेः ॥ ३ ॥

मोहक्षयादनुभवन्नपि नाथ मर्त्यो
नूनं गुणान्गणयितुं न तव क्षमेत ।
कल्पान्तवान्तपयसः प्रकटोऽपि यस्मा-
न्मीयेत केन जलधेर्ननु रत्नराशिः ॥ ४ ॥

अभ्युद्यतोऽस्मि तव नाथ जडाशयोऽपि
कर्तुं स्तवं लसदसंख्यगुणाकरस्य ।
बालोऽपि किं न निजबाहुयुगं वितत्य
विस्तीर्णतां कथयति स्वधियाम्बुराशेः ॥ ५ ॥
ये योगिनामपि न यान्ति गुणास्तवेश
वक्तुं कथं भवति तेषु ममावकाशः ।
जाता तदेवमसमीक्षितकारितेयं
जल्पन्ति वा निजगिरा ननु पक्षिणोऽपि ॥ ६ ॥
आस्तामचिन्त्यमहिमा जिन संस्तवस्ते
नामापि पाति भवतो भवतो जगन्ति ।
तीव्रातपोपहतपान्थजनान्निदाघे
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ॥ ७ ॥
हृद्वर्तिनि त्वयि विभो शिथिलीभवन्ति
जन्तोः क्षणेन निबिडा अपि कर्मबन्धाः ।
सद्यो भुजंगममया इव मध्यभाग-
मभ्यागते वनशिखण्डिनि चन्दनस्य ॥ ८ ॥
मुच्यन्त एव मनुजाः सहसा जिनेन्द्र
रौद्रैरुपद्रवशतैस्त्वयि वीक्षितेऽपि ।

गोस्वामिनि स्फुरिततेजसि दृष्टमात्रे
चौरैरिवाशु पशवः प्रपलायमानैः ॥ ९ ॥

त्वं तारको जिन कथं भविनां त एव
त्वामुद्वहन्ति हृदयेन यदुत्तरन्तः ।
यद्वा दृतिस्तरति यज्जलमेष नून-
मन्तर्गतस्य मरुतः स किलानुभावः ॥ १० ॥

यस्मिन्हरप्रभृतयोऽपि हतप्रभावाः
सोऽपि त्वया रतिपतिः क्षपितः क्षणेन ।
विध्यापिता हुतभुजः पयसाथ येन
पीतं न किं तदपि दुर्धरवाडवेन ॥ ११ ॥

स्वामिन्ननल्पगरिमाणमपि प्रपन्ना-
स्त्वां जन्तवः कथमहो हृदये दधानाः ।
जन्मोदधिं लघु तरन्त्यतिलाघवेन
चिन्त्यो न हन्त महतां यदि वा प्रभावः ॥ १२ ॥

क्रोधस्त्वया यदि विभो प्रथमं निरस्तो
ध्वस्तास्तदा वद कथं किल कर्मचौराः ।
प्लोषत्यमुत्र यदि वा शिशिरापि लोके
नीलद्रुमाणि विपिनानि न किं हिमानी ॥ १३ ॥

त्वां योगिनो जिन सदा परमात्मरूप-
मन्वेषयन्ति हृदयाम्बुजकोषदेशे ।
पूतस्य निर्मलरुचेर्यदि वा किमन्य-
दक्षस्य संभवपदं ननु कर्णिकायाः ॥ १४ ॥
ध्यानाज्जिनेश भवतो भविनः क्षणेन
देहं विहाय परमात्मदशां व्रजन्ति ।
तीव्रानलादुपलभावमपास्य लोके
चामीकरत्वमचिरादिव धातुभेदाः ॥ १५ ॥
अन्तः सदैव जिन यस्य विभाव्यसे त्वं
भव्यैः कथं तदपि नाशयसे शरीरम् ।
एतत्स्वरूपमथ मध्यविवर्तिनो हि
यद्विग्रहं प्रशमयन्ति महानुभावाः ॥ १६ ॥
आत्मा मनीषिभिरयं त्वदभेदबुद्ध्या
ध्यातो जिनेन्द्र भवतीह भवत्प्रभावः ।
पानीयमप्यमृतमित्यनुचिन्त्यमानं
किं नाम नो विषविकारमपाकरोति ॥ १७ ॥
त्वामेव वीततमसं परवादिनोऽपि
नूनं विभो हरिहरादिधिया प्रपन्नाः ।

किं काचकामलिभिरीश सितोऽपि शङ्खो
नो गृह्यते विविधवर्णविपर्ययेण ॥ १८ ॥
धर्मोपदेशसमये सविधानुभावा
दास्तां जनो भवति ते तरुरप्यशोकः ।
अभ्युद्गते दिनपतौ समहीरुहोऽपि
किं वा विबोधमुपयाति न जीवलोकः ॥ १९ ॥
चित्रं विभो कथमवाङ्मुखवृन्तमेव
विष्वक्पतत्यविरला सुरपुष्पवृष्टिः ।
त्वद्गोचरे सुमनसां यदि वा मुनीश
गच्छन्ति नूनमध एव हि बन्धनानि ॥ २० ॥
स्थाने गभीरहृदयोदधिसंभवायाः
पीयूषतां तव गिरः समुदीरयन्ति ।
पीत्वा यतः परमसंमदसङ्गभाजो
भव्या व्रजन्ति तरसाप्यजरामरत्वम् ॥ २१ ॥
स्वामिन्सुदूरमवनम्य समुत्पतन्तो
मन्ये वदन्ति शुचयः सुरचामरौघाः
येऽस्मै नतिं विदधते मुनिपुंगवाय
ते नूनमूर्ध्वगतयः खलु शुद्धभावाः ॥ २२ ॥

श्यामं गभीरगिरमुज्ज्वलहेमरत्न-
सिंहासनस्थमिह भव्यशिखण्डिनस्त्वाम् ।
आलोकयन्ति रभसेन नदन्तमुच्चै-
श्चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥ २३ ॥
उद्गच्छता तव शितिद्युतिमण्डलेन
लुप्तच्छदच्छविरशोकतरुर्बभूव ।
सांनिध्यतोऽपि यदि वा तव वीतराग
नीरागतां व्रजति को न सचेतनोऽपि ॥ २४ ॥
भो भोः प्रमादमवधूय भजध्वमेन-
मागत्य निर्वृतिपुरीं प्रति सार्थवाहम् ।
एतन्निवेदयति देव जगत्त्रयाय
मन्ये नदन्नभिनभः सुरदुन्दुभिस्ते ॥ २५ ॥
उद्द्योतितेषु भवता भुवनेषु नाथ
तारान्वितो विधुरयं विहताधिकारः ।
मुक्ताकलापकलितोरुसितातपत्र-
व्याजात्त्रिधा धृततनुर्ध्रुवमभ्युपेतः ॥ २६ ॥
स्वेन प्रपूरितजगत्त्रयपिण्डितेन
कान्तिप्रतापयशसामिव संचयेन ।

माणिक्यहेमरजतप्रविनिर्मितेन
सालत्रयेण भगवन्नभितो विभासि ॥ २७ ॥
दिव्यस्रजो जिन नमत्रिदशाधिपाना-
मुत्सृज्य रत्नरचितानपि मौलिबन्धान् ।
पादौ श्रयन्ति भवतो यदि वापरत्र
त्वत्संगमे सुमनसो न रमन्त एव ॥ २८ ॥
त्वं नाथ जन्मजलधेर्विपराङ्मुखोऽपि
यत्तारयत्यसुमतो निजपृष्ठलग्नान ।
युक्तं हि पार्थिवनिपस्य सतस्तवैव
चित्रं विभो यदसि कर्मविपाकशून्यः ॥ २९ ॥
विश्वेश्वरोऽपि जनपालक दुर्गतस्त्वं
किं वाक्षरप्रकृतिरप्यलिपिस्त्वमीश ।
अज्ञानवत्यपि सदैव कथंचिदेव
ज्ञानं त्वयि स्फुरति विश्वविकासहेतुः ॥ ३० ॥
प्राग्भारसंभृतनभांसि रजांसि रोषा-
दुत्थापितानि कमठेन शठेन यानि ।
छायापि तैस्तव न नाथ हता हताशो
ग्रस्तस्त्वमीभिरयमेव परं दुरात्मा ॥ ३१ ॥

यद्गर्जदूर्जितघनौघमदभ्रभीम-

भ्रश्यत्तडिन्मुसलमांसलघोरधारम् ।

दैत्येन मुक्तमथ दुस्तरवारि दध्रे

तेनैव तस्य जिन दुस्तरवारिकृत्यम् ॥ ३२ ॥

ध्वस्तोर्ध्वकेशविकृताकृति मर्त्यमुण्ड-

प्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः ।

प्रेतव्रजः प्रति भवन्तमपीरितो यः

सोऽस्याभवत्प्रतिभवं भवदुःखहेतुः ॥ ३३ ॥

धन्यास्त एव भुवनाधिप ये त्रिसंध्य-

माराधयन्ति विधिवद्विधुतान्यकृत्याः ।

भक्त्योल्लसत्पुलकपक्ष्मलदेहदेशाः

पादद्वयं तव विभो भुवि जन्मभाजः ॥ ३४ ॥

अस्मिन्नपारभववारिनिधौ मुनीश

मन्ये न मे श्रवणगोचरतां गतोऽसि ।

आकर्णिते तु तव गोत्रपवित्रमन्त्रे

किं वा विपद्विषधरी सविधं समेति ॥ ३५ ॥

जन्मान्तरेऽपि तव पादयुगं न देव

मन्ये मया महितमीहितदानदक्षम् ।

तेनेह जन्मनि मुनीश पराभवानां
जातो निकेतनमहं मथिताशयानाम् ॥ ३६ ॥

नूनं न मोहतिमिरावृतलोचनेन
पूर्वं विभो सकृदपि प्रविलोकितोऽसि
मर्माविधो विधुरयन्ति हि मामनर्थाः
प्रोद्यत्प्रबन्धगतयः कथमन्यथैते ॥ ३७ ॥

आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि
नूनं न चेतसि मया विधृतोऽसि भक्त्या ।
जातोऽस्मि तेन जनबान्धव दुःखपात्रं
यस्मात्क्रियाः प्रतिफलन्ति न भावशून्याः ॥३८॥

त्वं नाथ दुःखिजनवत्सल हे शरण्य
कारुण्यपुण्यवसते वशिनां वरेण्य ।
भक्त्या नते मयि महेश दयां विधाय
दुःखाङ्कुरोद्दलनतत्परतां विधेहि ॥ ३९ ॥

निःसंख्यसारशरणं शरणं शरण्य-
मासाद्य सादितरिपुप्रथितावदानम् ।
त्वत्पादपङ्कजमपि प्रणिधानवन्ध्यो
वन्ध्योऽस्मि चेद्भुवनपावन हा हतोऽस्मि ॥ ४० ॥

देवेन्द्रवन्द्य विदिताखिलवस्तुसार
संसारतारक विभो भुवनाधिनाथ ।
त्रायस्व देव करुणाह्रद मां पुनीहि
सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥

यद्यस्ति नाथ भवदङ्घ्रिसरोरुहाणां
भक्तेः फलं किमपि संततसंचितायाः ।
तन्मे त्वदेकशरणस्य शरण्य भूयाः
स्वामी त्वमेव भुवनेऽत्र भवान्तरेऽपि ॥ ४२ ॥

इत्थं समाहितधियो विधिवज्जिनेन्द्र
सान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः ।
त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्ष्या
ये संस्तवं तव विभो रचयन्ति भव्याः ॥ ४३ ॥

जननयनकुमुदचन्द्र प्रभास्वराः स्वर्गसंपदो भुक्त्वा ।
ते विगलितमलनिचया अचिरान्मोक्षं प्रपद्यन्ते ॥ ४४ ॥

( युग्मम् )

इति श्रीसिद्धसेनदिवाकरविरचितं पार्श्वनाथस्य कल्याणमन्दिरस्तोत्रम् ।

श्रीवादिराजप्रणीत

# एकीभावस्तोत्रम् ।

एकीभावं गत इव मया यः स्वयं कर्मबन्धो
घोरं दुःखं भवभवगतो दुर्निवारः करोति ।
तस्याप्यस्य त्वयि जिनरवे भक्तिरुन्मुक्तये चे-
ज्जेतुं शक्यो भवति न तया कोऽपरस्तापहेतुः ॥ १ ॥
ज्योतीरूपं दुरितनिवहध्वान्तविध्वंसहेतुं
त्वामेवाहुर्जिनवर चिरं तत्त्वविद्याभियुक्ताः ।
चेतोवासे भवसि च मम स्फारमुद्भासमान-
स्तस्मिन्नंहः कथमिव तमो वस्तुतो वस्तुमीष्टे ॥ २ ॥
आनन्दाश्रुस्नपितवदनं गद्गदं चाभिजल्प-
न्यश्चायेत त्वयि दृढमनाः स्तोत्रमन्त्रैर्भवन्तम् ।
तस्याभ्यस्तादपि च सुचिरं देहवल्मीकमध्या-
न्निष्कास्यन्ते विविधविषमव्याधयः काद्रवेयाः ॥ ३ ॥
प्रागेवेह त्रिदिवभवनादेष्यता भव्यपुण्या-
त्पृथ्वीचक्रं कनकमयतां देव निन्ये त्वयेदम् ।
ध्यानद्वारं मम रुचिकरं स्वान्तगेहं प्रविष्ट-
स्तत्किं चित्रं जिन वपुरिदं यत्सुवर्णीकरोषि ॥ ४ ॥

लोकस्यैकस्त्वमसि भगवान्निर्निमित्तेन बन्धु-
स्त्वय्येवासौ सकलविषया शक्तिरप्रत्यनीका ।
भक्तिस्फीतां चिरमधिवसन्मामिकां चित्तशय्यां
मय्युत्पन्नं कथमिव ततः क्लेशयूथं सहेथाः ॥ ५ ॥
जन्माटव्यां कथमपि मया देव दीर्घं भ्रमित्वा
प्राप्तैवेयं तव नयकथा स्फारपीयूषवापी ।
तस्या मध्ये हिमकरहिमव्यूहशीते नितान्तं
निर्मग्नं मां न जहति कथं दुःखदावोपतापाः ॥ ६ ॥
पादन्यासादपि च पुनतो यात्रया ते त्रिलोकीं
हेमाभासो भवति सुरभिः श्रीनिवासश्च पद्मः ।
सर्वाङ्गेण स्पृशति भगवंस्त्वय्यशेषं मनो मे
श्रेयः किं तत्स्वयमहरहर्यन्न मामभ्युपैति ॥ ७ ॥
पश्यन्तं त्वद्वचममृतं भक्तिपात्र्या पिबन्तं
कर्मारण्यात्पुरुषमसमानन्दधाम प्रविष्टम् ।
त्वां दुर्वारस्मरमदहरं त्वत्प्रसादैकभूमिं
क्रूराकाराः कथमिव रुजाकण्टका निर्लुठन्ति ॥ ८ ॥
पाषाणात्मा तदितरसमः केवलं रत्नमूर्ति-
र्मानस्तम्भो भवति च परस्तादृशो रत्नवर्गः ।

दृष्टिप्राप्तो हरति स कथं मानरोगं नराणां
प्रत्यासत्तिर्यदि न भवतस्तस्य तच्छक्तिहेतुः ॥ ९ ॥
हृद्यः प्राप्तो मरुदपि भवन्मूर्तिशैलोपवाही
सद्यः पुंसां निरवधि रुजाधूलिबन्धं धुनोति ।
ध्यानाहूतो हृदयकमलं यस्य तु त्वं प्रविष्ट-
स्तस्याशक्यः क इह भुवने देव लोकोपकारः ॥१०॥
जानासि त्वं मम भवभवे यच्च यादृक्च दुःखं
जातं यस्य स्मरणमपि मे शस्त्रवन्निष्पिनष्टि ।
त्वं सर्वेशः सकृप इति च त्वामुपेतोऽस्मि भक्त्या
यत्कर्तव्यं तदिह विषये देव एव प्रमाणम् ॥ ११ ॥
प्रापद्दैवं तव नुतिपदैर्जीवकेनोपदिष्टैः
पापाचारी मरणसमये सारमेयोऽपि सौख्यम् ।
कः संदेहो यदुपलभते वासवश्रीप्रभुत्वं
जल्पञ्जाप्यैर्मणिभिरमलैस्त्वन्नमस्कारचक्रम् ॥१२॥
शुद्धे ज्ञाने शुचिनि चरिते सत्यपि त्वय्यनीचा
भक्तिर्नो चेदनवधि सुखावञ्चिका कुञ्चिकेयम् ।
शक्योद्घाटं भवति हि कथं मुक्तिकामस्य पुंसो
मुक्तिद्वारं परिदृढमहामोहमुद्राकवाटम् ॥ १३ ॥

प्रच्छन्नः खल्वयमघमयैरन्धकारैः समन्ता-

त्पन्था मुक्तेः स्थपुटितपदः क्लेशगर्तैरगाधैः ।

तत्कस्तेन व्रजति सुखतो देव तत्त्वावभासी

यद्यग्रेऽग्रे न भवति भवद्भारतीरत्नदीपः ॥ १४ ॥

आत्मज्योतिर्निधिरनवधिर्द्रष्टुरानन्दहेतुः

कर्मक्षोणीपटलपिहितो योऽनवाप्यः परेषाम् ।

हस्ते कुर्वन्त्यनतिचिरतस्तं भवद्भक्तिभाजः

स्तोत्रैर्बन्धप्रकृतिपुरुषोद्दामधात्रीखनित्रैः ॥ १५ ॥

प्रत्युत्पन्नानयहिमगिरेरायता चामृताब्धे-

र्या देव त्वत्पदकमलयोः संगता भक्तिगङ्गा ।

चेतस्तस्यां मम रुचिवशादाप्लुतं क्षालितांहः

कल्माषं यद्भवति किमियं देव संदेहभूमिः ॥ १६ ॥

प्रादुर्भूत स्थिरपदसुखत्वामनुध्यायतो मे

त्वय्येवाहं स इति मतिरुत्पद्यते निर्विकल्पा ।

मिथ्यैवेयं तदपि तनुते तृप्तिमभ्रेषरूपां

दोषात्मानोऽप्यभिमतफलास्त्वत्प्रसादाद्भवन्ति ॥१७॥

मिथ्यावादं मलमपनुदन्सप्तभङ्गीतरङ्गै-

र्वागम्भोधिर्भुवनमखिलं देव पर्येति यस्ते ।

तस्यार्त्तिं सपदि विबुधाश्वेतसैवाचलेन
व्यातन्वन्तः सुचिरममृतासेवया तृप्नुवान्ति ॥ १८ ॥
आहार्येभ्यः स्पृहयति परं यः स्वभावादहृद्यः
शस्त्रग्राही भवति सततं वैरिणा यश्च शक्यः ।
सर्वाङ्गेषु त्वमसि सुभगस्त्वं न शक्यः परेषां
तत्किं भूषावसनकुसुमैः किं च शस्त्रैरुदस्त्रैः ॥ १९ ॥
इन्द्रः सेवां तव सुकुरुतां किं तया श्लाघनं ते
तस्यैवेयं भवलयकरी श्लाघ्यतामातनोति ।
त्वं निस्तारी जननजलधेः सिद्धिकान्तापतिस्त्वं
त्वं लोकानांप्र भुरिति तव श्लाघ्यते स्तोत्रमित्थम्॥२०॥
वृत्तिर्वाचामपरसदृशी न त्वमन्येन तुल्य-
स्तुत्युद्गाराः कथमिव ततस्त्वय्यमी नः क्रमन्ते ।
मैवं भूवंस्तदपि भगवन्भक्तिपीयूषपुष्टा-
स्ते भव्यानामभिमतफलाः पारिजाता भवन्ति ॥२१॥
कोपावेशो न तव न तव क्वापि देव प्रसादो
व्याप्तं चेतस्तव हि परमोपक्षयैवानपेक्षम् ।
आज्ञावश्यं तदपि भुवनं संनिधिर्वैरहारी
क्वैवंभूतं भुवनतिलक प्राभवं त्वत्परेषु ॥ २२ ॥

देव स्तोतुं त्रिदिवगणिकामण्डलीगीतकीर्ति
तोतूर्ति त्वां सकलविषयज्ञानमूर्ति जनो यः ।
तस्य क्षेमं न पदमटतो जातु जोहूर्ति पन्था-
स्तत्वग्रन्थस्मरणविषये नैष मोमूर्ति मर्त्यः ॥ २३ ॥

चित्ते कुर्वन्निरवधिसुखज्ञान दृग्वीर्यरूपं
देव त्वां यः समयनियमादादरेण स्तवीति ।
श्रेयोमार्गं स खलु सुकृती तावता पूरयित्वा
कल्याणानां भवति विषयः पञ्चधा पञ्चितानाम् २४

भक्तिप्रह्वमहेन्द्रपूजितपद त्वत्कीर्तने न क्षमाः
सूक्ष्मज्ञानदृशोऽपि संयमभृतः के हन्त मन्दा वयम् ।
अस्माभिस्तवनच्छलेन तु परस्त्वय्यादरस्तन्यते
स्वात्माधीनसुखैषिणां स खलु नः कल्याणकल्पद्रुमः २५

वादिराजमनु शाब्दिकलोको वादिराजमनु तार्किकसिंहः ।
वादिराजमनु काव्यकृतस्ते वादिराजमनु भव्यसहायः २६

इति श्रीवादिराजकृतमेकीभावस्तोत्रम् ।

श्रीधनंजयप्रणीतं ।

# विषापहारस्तोत्रम् ।

स्वात्मस्थितः सर्वगतः समस्तव्यापारवेदी विनिवृत्तसङ्गः ।
प्रवृद्धकालोऽप्यजरो वरेण्यः पायादपायात्पुरुषः पुराणः ॥ १ ॥
परैरचिन्त्यं युगभारमेकः स्तोतुं वहन्योगिभिरप्यशक्यः ।
स्तुत्योऽद्य मेऽसौ वृषभो न भानोः किमप्रवेशे विशति प्रदीपः॥ २॥
तत्याज शक्रः शकनाभिमानं नाहं त्यजामि स्तवनानुबन्धम् ।
स्वल्पेन बोधेन ततोऽधिकार्थं वातायनेनेव निरूपयामि ॥ ३ ॥
त्वं विश्वदृश्वा सकलैरदृश्यो विद्वानशेषं निखिलैरवेद्यः ।
वक्तुं कियान्कीदृश इत्यशक्यः स्तुतिस्ततोऽशक्तिकथा तवास्तु ४॥
व्यापीडितं बालमिवात्मदोषैरुल्लाघतां लोकमवापिपस्त्वम् ।
हिताहितान्वेषणमान्द्यभाजः सर्वस्य जन्तोरसि बालवैद्यः ॥५॥
दाता न हर्ता दिवसं विवस्वानद्यश्व इत्यच्युत दर्शिताशः ।
सव्याज्यमेवं गमयत्यशक्तः क्षणेन दत्सेऽभिमतं नताय ॥ ६ ॥
उपैति भक्त्या सुमुखः सुखानि त्वयि स्वभावाद्विमुखश्च दुःखम् ।
सदावदातद्युतिरेकरूपस्तयोस्त्वमादर्श इवावभासि ॥ ७ ॥
अगाधताब्धेः स यतः पयोधिर्मेरोश्च तुङ्गा प्रकृतिः स यत्र ॥
द्यावापृथिव्योः पृथुता तथैव व्याप त्वदीया भुवनान्तराणि ॥८॥

